॥ त्रिपुरोपनिषत् ॥

त्रिपुरोपनिषद्वेद्यपारमैश्वर्यवैभवम् ।
अखण्डानन्दसाम्राज्यं रामचन्द्रपदं भजे ॥

ॐ वाङ्मे मनसि प्रतिष्ठिता । मनो मे वाचि प्रतिष्ठितम् ।
आविरावीर्म एधि । वेदस्य म आणीस्थः । श्रुतं मे मा प्रहासीः ।
अनेनाधीतेनाहोरात्रान् संदधामि । ऋतं वदिष्यामि ।
सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् ।
अवतु वक्तारम् । अवतु वक्तारम् ।
ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ तिस्रः पुरास्त्रिपथा विश्वचर्षणा अत्राकथा अक्षराः
सन्निविष्टाः ।
अधिष्ठायैना अजरा पुराणी महत्तरा महिमा देवतानाम् ॥ १॥

नवयोनिर्नवचक्राणि दधिरे नवैव योगा नव योगिन्यश्च ।
नवानां चक्रा अधिनाथाः स्योना नव मुद्रा नव भद्रा महीनाम् ॥ २॥

एका सा आसीत् प्रथमा सा नवासीदासोनविंशादासोनत्रिंशत् ।
चत्वारिंशादथ तिस्रः समिधा उशतीरिव मातरो मा विशन्तु ॥ ३॥

ऊर्ध्वज्वलज्वलनं ज्योतिरग्रे तमो वै तिरश्चीनमजरं तद्रजोऽभूत् ।
आनन्दनं मोदनं ज्योतिरिन्दो रेता उ वै मण्डला मण्डयन्ति ॥ ४॥

तिस्रश्च [ यास्तिस्रो ] रेखाः सदनानि
भूमेस्त्रिविष्टपास्त्रिगुणास्त्रिप्रकाराः ।
एतत्पुरं [ एतत्त्रयं ] पूरकं पूरकाणामत्र [
पूरकाणां मन्त्री ] प्रथते मदनो मदन्या ॥ ५॥

मदन्तिका मानिनी मंगला च सुभगा च सा सुन्दरी सिद्धिमत्ता ।
लज्जा मतिस्तुष्टिरिष्टा च पुष्टा लक्ष्मीरुमा ललिता लालपन्ती ॥ ६॥

इमां विज्ञाय सुधया मदन्ती परिसृता तर्पयन्तः स्वपीठम् ।
नाकस्य पृष्ठे वसन्ति परं धाम त्रैपुरं चाविशन्ति ॥ ७॥

कामो योनिः  कामकला व्रजपाणिर्गुहा हसा मातरिश्वाभ्रमिन्द्रः ।
पुनर्गुहा सकला मायया च पूरूच्येषा विश्वमातादिविद्या ॥ ८॥

षष्ठं सप्तममथ वह्निसारथिमस्या मूलत्रिक्रमा देशयन्तः ।
कथ्यं कविं कल्पकं काममीशं तुष्टुवांसो अमृतत्वं
भजन्ते ॥ ९॥

त्रिविष्टपं त्रिमुखं विश्वमातुर्नवरेखाः स्वरमध्यं तदीले ।
[ पुरं हन्त्रीमुखं विश्वमातू रवे रेखा स्वरमध्यं तदेषा । ]
बृहत्तिथिर्दशा पञ्चादि नित्या सा षोडशी पुरमध्यं बिभर्ति ॥ १०॥

यद्वा मण्डलाद्वा स्तनबिंबमेकं मुखं चाधस्त्रीणि गुहा सदनानि ।
कामी कलां काम्यरूपां विदित्वा [ चिकित्वा ] नरो जायते
कामरूपश्च काम्यः [ कामः ] ॥ ११॥

परिसृतम् झषमाद्यं [ झषमाजं ] फलं च
भक्तानि योनीः सुपरिष्कृताश्च ।
निवेदयन्देवतायै महत्यै स्वात्मीकृते सुकृते सिद्धिमेति ॥ १२॥

सृण्येव सितया विश्वचर्षणिः पाशेनैव प्रतिबध्नात्यभीकाम् ।
इषुभिः पञ्चभिर्धनुषा च विध्यत्यादिशक्तिररुणा विश्वजन्या ॥ १३॥

भगः शक्तिर्भगवान्काम ईश उभा दाताराविह सौभगानाम् ।
समप्रधानौ समसत्वौ समोजौ तयोः शक्तिरजरा विश्वयोनिः ॥ १४॥

परिस्रुता हविषा भावितेन प्रसङ्कोचे गलिते वैमनस्कः ।
शर्वः सर्वस्य जगतो विधाता धर्ता हर्ता विश्वरूपत्वमेति ॥ १५॥

इयं महोपनिषत्त्रैपुर्या यामक्षरं परमो गीर्भिरीट्टे ।
एषर्ग्यजुः परमेतच्च सामायमथर्वेयमन्या च विद्या ॥ १६॥

ॐ ह्रीम् ॐ ह्रीमित्युपनिषत् ॥

ॐ वाङ्मे मनसि प्रतिष्ठिता । मनो मे वाचि प्रतिष्ठितम् ।
आविरावीर्म एधि । वेदस्य म आणीस्थः । श्रुतं मे मा प्रहासीः ।
अनेनाधीतेनाहोरात्रान् संदधामि । ऋतं वदिष्यामि ।
सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् ।
अवतु वक्तारम् । अवतु वक्तारम् ।
ॐ शान्तिः शान्तिः शान्तिः ॥

